श्री० टी०—वेदानामिति । वासव इन्द्रः । भूतानां संबन्धिनी चेतना ज्ञानशक्तिरहमस्मि ॥ २२ ॥

**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**

म० टी०—रुद्राणामेकादशानां मध्ये शंकरः । वित्तेशो धनाध्यक्षः कुबेरो यक्षरक्षसां यक्षाणां राक्षसानां च । वसूनामष्टानां पावकोऽग्निः । मेरुः सुमेरुः शिखरिणां शिखरवतामत्युच्छ्रितानां पर्वतानाम् ॥ २३ ॥

श्री० टी०—रुद्राणामिति । यक्षरक्षसामिति राक्षसानामपि क्रूरत्वादिसाम्याद्यक्षैः सहैकीकृत्य निर्देशः । तेषां मध्ये वित्तेशः कुबेरोऽस्मि । पावकोऽग्निः । शिखरिणां शिखरवतामुच्छ्रितानां मध्ये मेरुः ॥ २३ ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

म० टी०—इन्द्रस्य सर्वराजश्रेष्ठत्वात्तत्पुरोधसं बृहस्पतिं सर्वेषां पुरोधसां राजपुरोहितानां मध्ये मुख्यं श्रेष्ठं मामेव हे पार्थ विद्धि जानीहि । सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दो गुहोऽहमस्मि । सरसां देवखातजलाशयानां मध्ये सागरः सगरपुत्रैः खातो जलाशयोऽहमस्मि ॥ २४ ॥

श्री० टी०—पुरोधसामिति । पुरोधसां मध्ये देवपुरोहितत्वान्मुख्यं बृहस्पतिं मां विद्धि । सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि । सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

म० टी०—महर्षीणां सप्तब्रह्मणां मध्ये भृगुरतितेजस्वित्वादहम् । गिरां वाचां पदलक्षणानां मध्य एकमक्षरं पदमोंकारोऽहमस्मि । यज्ञानां मध्ये जपयज्ञो हिंसादिदोषशून्यत्वेनात्यन्तशोधकोऽहमस्मि । स्थावराणां स्थितिमतां मध्ये हिमालयोऽहम् । शिखरवतां मध्ये हि मेरुरहमित्युक्तमतः स्थावरत्वेन शिखरवत्त्वेन चार्थभेदाददोषः ॥ २५ ॥

श्री० टी०—महर्षीणामिति । गिरां वाचां पदात्मिकानां मध्य एकमक्षरमोंकाराख्यं पदमस्मि । यज्ञानां श्रौतस्मार्तानां मध्ये जपरूपो यज्ञोऽहम् ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**

म० टी०—सर्वेषां वृक्षाणां वनस्पतीनामन्येषां च । देवा एव सन्तो ये मन्त्रदर्शित्वेन ऋषित्वं प्राप्तास्ते देवर्षयस्तेषां मध्ये नारदोऽहमस्मि । गन्धर्वाणां गानधर्मणां देवगायकानां मध्ये चित्ररथोऽहमस्मि । सिद्धानां जन्मनैव विना प्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानामधिगतपरमार्थानां मध्ये कपिलो मुनिरहम् ॥ २६ ॥

श्री० टी०—अश्वत्थ इति । देवा एव सन्तो मन्त्रदर्शनेन य ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि । सिद्धानामुत्पत्तित एवाधिगतपरमार्थानां मध्ये कपिलाख्यो मुनिरस्मि ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

म० टी०—अश्वानां मध्य उच्चैःश्रवसममृतमथनोद्भवमश्वं मां विद्धि । ऐरावतं गजममृतमथनोद्भवं गजेन्द्राणां मध्ये मां विद्धि । नराणां च मध्ये नराधिपं राजानं मां विद्धीत्यनुषज्यते ॥ २७ ॥

श्री० टी०—उच्चैःश्रवसमिति । अमृतार्थं क्षीराब्धिमथन उद्भूतमुच्चैःश्रवसं नामाश्वं मद्विभूतिं विद्धि । अमृतोद्भवमित्येतदैरावतेऽपि संबध्यते । नराधिपं राजानं च विद्धि ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

म० टी०—आयुधानामस्त्राणां मध्ये वज्रं दधीचेरस्थिसंभवमस्त्रमहमस्मि । धेनूनां दोग्ध्रीणां मध्ये कामं दोग्धीति कामधुक्, समुद्रमथनोद्भवा वसिष्ठस्य कामधेनुरहमस्मि । कामानां मध्ये प्रजनः प्रजनयिता पुत्रोत्पत्त्यर्थो यः कंदर्पः कामः सोऽहमस्मि । चकारस्त्वर्थो रतिमात्रहेतुकामव्यावृत्त्यर्थः । सर्पाश्च नागाश्च जातिभेदाद्भिद्यन्ते । तत्र सर्पाणां मध्ये तेषां राजा वासुकिरहमस्मि ॥ २८ ॥

श्री० टी०—आयुधानामिति । आयुधानां मध्ये वज्रम् । कामान्दोग्धीति कामधुक् । प्रजनः प्रजोत्पत्तिहेतुः कंदर्पः कामोऽस्मि, न केवलं संभोगप्रधानः कामो मद्विभूतिः, अशास्त्रीयत्वात् । सर्पाणां सविषाणां राजा वासुकिरस्मि ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ॥
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

---

१ इ. °श्वं ससमुद्रं म° ।

म० टी०—नागानां जातिभेदानां मध्ये तेषां राजाऽनन्तश्च शेषाख्योऽहमस्मि। यादसां जलचराणां मध्ये तेषां राजा वरुणोऽहमस्मि। पितॄणां मध्येऽर्यमा नाम पितृराजश्चाहमस्मि। संयमतां संयमं धर्माधर्मफलदानेनानुग्रहं निग्रहं च कुर्वतां मध्ये यमोऽहमस्मि॥२९॥

श्री० टी०—अनन्त इति। नागानां निर्विषाणां राजाऽनन्तः शेषोऽस्मि। यादसां जलचराणां राजा वरुणोऽहमस्मि पितॄणां राजाऽर्यमाऽस्मि। संयमतां नियमनं कुर्वतां मध्ये यमोऽहमस्मि॥ २९॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्॥**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्॥ ३०॥**

म० टी०—दैत्यानां दितिवंश्यानां मध्ये प्रकर्षेण ह्लादयत्यानन्दयति परमसात्त्विकत्वेन सर्वानिति प्रह्लादश्चास्मि। कलयतां संख्यानं गणनं कुर्वतां मध्ये कालोऽहम्। मृगेन्द्रः सिंहो मृगाणां पशूनां मध्येऽहम्। वैनतेयश्च पक्षिणां विनतापुत्रो गरुडः॥ ३०॥

श्री० टी०—प्रह्लाद इति। दैत्यानां राजा प्रह्लादोऽस्मि। कलयतां वशीकुर्वतां गणयतां वा मध्ये कालोऽहम्। मृगेन्द्रः सिंहः। पक्षिणां मध्ये वैनतेयो गरुडोऽस्मि॥३०॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम्॥**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी॥ ३१॥**

म० टी०—पवतां पावयितॄणां वेगवतां वा मध्ये पवनो वायुरहमस्मि। शस्त्रभृतां शस्त्रधारिणां युद्धकुशलानां मध्ये रामो दाशरथिरखिलराक्षसकुलक्षयकरः परमवीरोऽहमस्मि। साक्षात्स्वरूपस्याप्यनेन रूपेण चिन्तनार्थं वृष्णीनां वासुदेवोऽस्मीतिवदत्र पाठ इति प्रागुक्तम्। झषाणां मत्स्यानां मध्ये मकरो नाम तज्जातिविशेषः। स्रोतसां वेगेन चलज्जलानां नदीनां मध्ये सर्वनदीश्रेष्ठा जाह्नवी गङ्गाऽहमस्मि॥ ३१॥

श्री० टी०—पवन इति। पवतां पावयितॄणां वेगवतां वा मध्ये वायुरस्मि। शस्त्रभृतां वीराणां रामो दाशरथिः। यद्वा परशुरामः। झषाणां मत्स्यानां मध्ये मकरो मत्स्यविशेषोऽहम्। स्रोतसां प्रवाहोदकानां मध्ये भागीरथी॥ ३१॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन॥**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्॥ ३२॥**

म० टी०—सर्गाणामचेतनसृष्टीनामादिरन्तश्च मध्यं चोत्पत्तिस्थितिलया अहमेव हेऽर्जुन। भूतानां जीवाविष्टानां चेतनत्वेन प्रसिद्धानामेवाऽऽदिरन्तश्च मध्यं चेत्युक्तमुपक्रमे, इह त्वचेतनसर्गाणामिति न पौनरुक्त्यम्। विद्यानां मध्येऽध्यात्मविद्या मोक्षहेतुरात्मतत्त्व-

विद्याऽहम्। प्रवदतां प्रवदत्संबन्धिनां कथाभेदानां वादजल्पवितण्डात्मकानां मध्ये वादोऽहम्। भूतानामस्मि चेतनेत्यत्र यथा भूतशब्देन तत्संबन्धिनः परिणामा लक्षितास्तथेह प्रवदच्छब्देन तत्संबन्धिनः कथाभेदा लक्ष्यन्ते। अतो निर्धारणोपपत्तिः। यथाश्रुते तूभयत्रापि संबन्धे षष्ठी। तत्र तत्त्वबुभुत्स्वोर्वीतरागयोः सब्रह्मचारिणोर्गुरुशिष्ययोर्वा प्रमाणेन तर्केण च साधनदूषणात्मा सपक्षप्रतिपक्षपरिग्रहस्तत्त्वनिर्णयपर्यन्तो वादः। तदुक्तं "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति। वादफलस्य तत्त्वनिर्णयस्य दुर्दुरूढवादिनिराकरणेन संरक्षणार्थं विजिगीषुकथे जल्पवितण्डे जयपराजयमात्रपर्यन्ते। तदुक्तं "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवत्" इति। छलजातिनिग्रहस्थानैः परपक्षो दूष्यत इति जल्पे वितण्डायां च समानम्। तत्र वितण्डायामेकेन स्वपक्षः स्थाप्यत एव, अन्येन च स दूष्यत एव। जल्पे तूभाभ्यामपि स्वपक्षः स्थाप्यत उभाभ्यामपि परपक्षो दूष्यत इति विशेषः। तदुक्तं "यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः स प्रतिपक्षस्थापनाहीनो वितण्डा" इति। अतो वितण्डाद्वयशरीरत्वाज्जल्पो नाम[1] नैका कथा, किं तु शक्त्यतिशयज्ञानार्थं समयबन्धमात्रेण प्रवर्तत[2] इति खण्डनकाराः। तत्त्वाध्यवसायपर्यवसायित्वेन तु वादस्य श्रेष्ठत्वमुक्तमेव॥ ३२॥

श्री० टी०—सर्गाणामिति। सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यं चैवाहम्। अहमादिश्च मध्यं चेत्यत्र सृष्ट्यादिकर्तृत्वं पारमैश्वर्यमुक्तम्। अत्र तूत्पत्तिप्रलयस्थितयो मद्विभूतित्वेन ध्येया इत्युच्यत इति विशेषः। अध्यात्मविद्याऽऽत्मविद्या। प्रवदतां वादिनां संबन्धिन्यो वादजल्पवितण्डाख्यास्तिस्रः कथाः प्रसिद्धाः। तासां मध्ये वादोऽहम्। यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते परपक्षश्च च्छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम। यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु च्छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति न तु स्वपक्षं साधयति सा वितण्डा नाम कथा। तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले। वादस्तु वीतरागयोः शिष्याचार्ययोरन्ययोर्वा तत्त्वनिर्णयफलः। अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः॥ ३२॥

**अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च॥**
**अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः॥ ३३॥**

म० टी०—अक्षराणां सर्वेषां वर्णानां मध्येऽकारोऽहमस्मि। "अकारो वै सर्वा वाक्" इति श्रुतेस्तस्य श्रेष्ठत्वं प्रसिद्धम्। द्वंद्वः समास उभयपदार्थप्रधानः सामासिकस्य समाससमूहस्य मध्येऽहमस्मि। पूर्वपदार्थप्रधानोऽव्ययीभाव उत्तरपदार्थप्रधानस्तत्पुरुषोऽ-

१ झ. नामैका। २ ग. छ. झ. °र्तन्त इ°।

त्यपदार्थप्रधानो बहुव्रीहिरिति तेषामुभयपदार्थसाम्याभावेनापकृष्टत्वात्। क्षयिकालाभिमान्यक्षयः परमेश्वराख्यः कालः "ज्ञः कालकालो गुणी सर्वविद्यः" इत्यादिश्रुतिप्रसिद्धोऽहमेव। कालः कलयतामहमित्यत्र तु क्षयी काल उक्त इति भेदः। कर्मफलविधातॄणां मध्ये विश्वतोमुखः सर्वतोमुखो धाता सर्वकर्मफलदातेश्वरोऽहमित्यर्थः॥ ३३॥

**श्री० टी०—अक्षराणामिति।** अक्षराणां वर्णानां मध्येऽकारोऽस्मि तस्य सर्ववाङ्मयत्वेन श्रेष्ठत्वात्। तथाच श्रुतिः—"अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति। सामासिकस्य समाससमूहस्य मध्ये द्वंद्वो रामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेन श्रेष्ठत्वात्। अक्षयः प्रवाहरूपः कालोऽहमेव। कालः कलयतामित्यत्राऽऽयुर्गणनात्मकः संवत्सरशताद्यायुःस्वरूपः काल उक्तः। स च तस्मिन्नायुषि क्षीणे सति क्षीयते। अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः। कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलविधाताऽहमित्यर्थः॥ ३३॥

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्॥**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा॥३४॥**

**म० टी०—**संहारकारिणां मध्ये सर्वहरः सर्वसंहारकारी मृत्युरहम्। भविष्यतां भाविकल्याणानां य उद्भव उत्कर्षः स चाहमेव। नारीणां मध्ये कीर्तिः श्रीर्वाक्स्मृतिर्मेधा धृतिः क्षमेति च सप्त धर्मपत्न्योऽहमेव। तत्र कीर्तिर्धार्मिकत्वनिमित्ता प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषयतारूपा ख्यातिः। श्रीर्धर्मार्थकामसंपत्, शरीरशोभा वा कान्तिर्वा। वाक्सरस्वती सर्वस्यार्थस्य प्रकाशिका संस्कृता वाणी। चकारान्मूर्त्याद्योऽपि धर्मपत्न्यो गृह्यन्ते। स्मृतिश्चिरानुभूतार्थस्मरणशक्तिः। अनेकग्रन्थार्थधारणाशक्तिर्मेधा। धृतिरवसादेऽपि शरीरेन्द्रियसंघातोत्तम्भनशक्तिः, उच्छृङ्खलप्रवृत्तिकारणेन चापलप्राप्तौ तन्निवर्तनशक्तिर्वा। क्षमा हर्षविषादयोरविकृतचित्तता। यासामाभासमात्रसंबन्धेनापि जनः सर्वलोकादरणीयो भवति तासां सर्वस्त्रीषूत्तमत्वमतिप्रसिद्धमेव॥ ३४॥

**श्री० टी०—मृत्युरिति।** संहारकारिणां मध्ये सर्वहरो मृत्युरहम्। भविष्यतां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहम्। नारीणां स्त्रीणां मध्ये कीर्त्याद्याः सप्त देवतारूपाः स्त्रियोऽहम्। यासामाभासमात्रयोगेन(ण) प्राणिनः श्लाघ्या भवन्ति ताः कीर्त्याद्याः स्त्रियो मद्विभूतयः॥ ३४॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम्॥**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः॥ ३५॥**

**म० टी०—**वेदानां सामवेदोऽस्मीत्युक्तं तत्रायमन्यो विशेषः साम्नामृगक्षरारूढानां गीतिविशेषाणां मध्ये त्वामिद्धि हवामह इत्यस्यामृचि गीतिविशेषो बृहत्साम। तच्चा-

तिरात्रे पृष्ठस्तोत्रं सर्वेश्वरत्वेनेन्द्रस्तुतिरूपमन्यतः श्रेष्ठत्वादहम्। छन्दसां नियताक्षरपादत्वरूपच्छन्दोविशिष्टानामृचां मध्ये द्विजातेर्द्वितीयजन्महेतुत्वेन प्रातःसवनादिसवनत्रयव्यापित्वेन त्रिष्टुब्जगतीभ्यां सोमाहरणार्थं गताभ्यां सोमो न लब्धोऽक्षराणि च हारितानि जगत्या त्रीणि त्रिष्टुभैकमिति चत्वारि तैरक्षरैः सह सोमस्याऽऽहरणेन च सर्वश्रेष्ठा गायत्र्यहम्। "चतुरक्षराणि ह वा अग्रे छन्दांस्यासुस्ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वा जगाम ततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरं हित्वाऽपतत्ततो गायत्री सोममच्छापतत्सा तानि चाक्षराणि हरन्त्यागच्छत्सोमं च तस्मादष्टाक्षरा गायत्री" इत्युपक्रम्य "तदाहुर्गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैः" इति शतपथश्रुतेः, "गायत्री वा इदं सर्वं भूतम्" इत्यादिच्छान्दोग्यश्रुतेश्च। मासानां द्वादशानां मध्येऽभिनवशालिवास्तूकशाकादिशाली शीतातपशून्यत्वेन च सुखहेतुर्मार्गशीर्षोऽहम्। ऋतूनां षण्णां मध्ये कुसुमाकरः सर्वसुगन्धिकुसुमानामाकरोऽतिरमणीयो वसन्तः, "वसन्ते ब्राह्मणमुपनयीत" "वसन्ते ब्राह्मणोऽग्नीनादधीत" "वसन्ते वसन्ते ज्योतिषा यजेत" "तद्धै वसन्त एवाभ्यारभेत" "वसन्तो वै ब्राह्मणस्यर्तुः" इत्यादिशास्त्रप्रसिद्धोऽहमस्मि ॥ ३५ ॥

**श्री० टी०—बृहत्सामेति।** त्वामिद्धि हवामह इत्यस्यामृचि गीयमानं बृहत्साम। तेन चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रेष्ठयम्। छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्रीमन्त्रोऽहम्, द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात्। कुसुमाकरो वसन्तः ॥३५॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**

**म० टी०—**छलयतां छलस्य परवञ्चनस्य कर्तॄणां संबन्धि द्यूतमक्षदेवनादिलक्षणं सर्वस्वापहारकारणमहमस्मि। तेजस्विनामत्युग्रप्रभावानां संबन्धि तेजोऽप्रतिहताज्ञत्वमहमस्मि। जेतॄणां पराजितापेक्षयोत्कर्षलक्षणो जयोऽस्मि। व्यवसायिनां व्यवसायः फलाव्यभिचार्युद्यमोऽहमस्मि। सत्त्ववतां सात्त्विकानां धर्मज्ञानवैराग्यैश्वर्यलक्षणं सत्त्वकार्यमेवात्र सत्त्वमहम् ॥ ३६ ॥

**श्री० टी०—द्यूतमिति।** छलयतामन्योन्यवञ्चनपराणां संबन्धि द्यूतमस्मि। तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि। जेतॄणां जयोऽस्मि। व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि। सत्त्ववतां सात्त्विकानां सत्त्वमहम् ॥ ३६ ॥

**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ॥**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥**

१ ख. मानैत्" इ°। २ ङ. °शालित्वेन शी°।

म० टी०—साक्षादीश्वरस्यापि विभूतिमध्ये पाठस्तेन रूपेण चिन्तनार्थ इति प्रागेवोक्तम् । वृष्णीनां मध्ये वासुदेवो वसुदेवपुत्रत्वेन प्रसिद्धस्त्वदुपदेष्टाऽयमहम् । तथा पाण्डवानां मध्ये धनंजयस्त्वमेवाहम् । मुनीनां मननशीलानामपि मध्ये वेदव्यासोऽहम् । कवीनां क्रान्तदर्शिनां सूक्ष्मार्थविवेकिनां मध्य उशना कविरिति ख्यातः शुक्रोऽहम् ॥ ३७॥

श्री० टी०—वृष्णीनामिति । वासुदेवो योऽहं त्वामुपदिशामि । धनंजयस्त्वमेव मद्विभूतिः । मुनीनां वेदार्थमननशीलानां वेदव्यासोऽहमस्मि । कवीनां क्रान्तदर्शिनां मध्य उशना नाम कविः शुक्रः ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

म० टी०—दमयतामदान्तानुत्पथात्पथि प्रवर्तयतामुत्पथप्रवृत्तौ निग्रहहेतुर्दण्डोऽहमस्मि । जिगीषतां जेतुमिच्छतां नीतिर्न्यायो जयोपायस्य प्रकाशकोऽहमस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनं वाचंयमत्वमहमस्मि । नहि तूष्णीं स्थितस्याभिप्रायो ज्ञायते । गुह्यानां गोप्यानां मध्ये ससंन्यासश्रवणमननपूर्वकमात्मनो निदिध्यासनलक्षणं मौनं वाऽहमस्मि । ज्ञानवतां ज्ञानिनां यच्छ्रवणमनननिदिध्यासनपरिपाकप्रभवमद्वितीयात्मसाक्षात्काररूपं सर्वाज्ञानविरोधि ज्ञानं तदहमस्मि ॥ ३८ ॥

श्री० टी०—दण्ड इति । दमयतां दमनकर्तॄणां संबन्धी दण्डोऽस्मि येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः । जेतुमिच्छतां संबन्धिनी सामाद्युपायरूपा नीतिरस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनमवचनमहमस्मि । न हि तूष्णीं स्थितस्याभिप्रायो ज्ञायते । ज्ञानवतां तत्त्वज्ञानिनां यज्ज्ञानं तदहम् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥

म० टी०—यदपि च सर्वभूतानां प्ररोहकारणं बीजं तन्मायोपाधिकं चैतन्यमहमेव हेऽर्जुन । मया विना यत्स्याद्भवेच्चरमचरं वा भूतं वस्तु तन्नास्त्येव यतः सर्वं मत्कार्यमेवेत्यर्थः ॥ ३९ ॥

श्री० टी०—यदिति । यदपि च सर्वभूतानां बीजं प्ररोहकारणं तदहम् । तत्र हेतुः—मया विना यत्स्याद्भवेत्तच्चरमचरं वा भूतं नास्त्येवेति ॥ ३९ ॥

म० टी०—प्रकरणार्थमुपसंहरन्विभूतिं संक्षिपति—

---

१ क. ग्न. म. 'नां काव्यद°।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ॥
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

हे परंतप परेषां शत्रूणां कामक्रोधलोभादीनां तापजनक मम दिव्यानां विभूतीनामन्त इयत्ता नास्ति । अतः सर्वज्ञेनापि सा न शक्यते ज्ञातुं वक्तुं वा सन्मात्रविषयत्वात्सर्वज्ञतायाः । एष तु त्वां प्रत्युद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो विस्तारो मया ॥ ४० ॥

श्री० टी०—प्रकरणार्थमुपसंहरति—नान्त इति । अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते । एष तु विभूतेर्विस्तर उद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

म० टी०—अनुक्ता अपि भगवतो विभूतीः संग्रहीतुमुपलक्षणमिदमुच्यते—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥

यद्यत्सत्त्वं प्राणिविभूतिमदैश्वर्ययुक्तं, तथा श्रीमत्, श्रीर्लक्ष्मीः संपत्, शोभा, कान्तिर्वा तया युक्तं, तथोर्जितं बलाद्यतिशयेन युक्तं तत्तदेव मम तेजसः शक्तेरंशेन संभूतं त्वमवगच्छ जानीहि ॥ ४१ ॥

श्री० टी०—पुनश्च साकाङ्क्षं प्रति कथंचित्साकल्येन कथयति—यद्यदिति। विभूतिमदैश्वर्ययुक्तम् । श्रीमत्संपत्तियुक्तम् । ऊर्जितं केनाचित्प्रभावबलादिना गुणेनातिशयितम् । यद्यत्सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन संभूतं जानीहि ॥ ४१ ॥

म० टी०—एवमवयवशो विभूतिमुक्त्वा साकल्येन तामाह—

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

---

अथवेति पक्षान्तरे । बहुनैतेन सावशेषेण ज्ञातेन किं तव स्याद्धेऽर्जुन । इदं कृत्स्नं सर्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य विधृत्य व्याप्य वाऽहमेव स्थितो न मद्व्यतिरिक्तं किंचिदस्ति " पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि " इति श्रुतेः । तस्मात्किमनेन परिच्छिन्नदर्शनेन सर्वत्र मद्दृष्टिमेव कुर्वित्यभिप्रायः ॥ ४२ ॥

कुर्वन्ति केऽपि कृतिनः क्वचिदप्यनन्ते
स्वान्तं विधाय विषयान्तरशान्तिमेव ॥
त्वत्पादपद्मविगलन्मकरन्दबिन्दु-
मास्वाद्य माद्यति मुहुर्मधुभिन्मनो मे ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामधिकारिभेदेन विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

श्री० टी०—अथवा किमनेन परिच्छिन्नदर्शनेन सर्वत्रैव मद्दृष्टिमेव कुर्वित्याह—अथवेति। बहुना पृथक्पृथग्ज्ञातेन किं तव कार्यं, यस्मादिदं सर्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वा, अहमेव स्थितः। न मद्व्यतिरिक्तं किंचिदस्ति "पादोऽस्य विश्वा भूतानि" इति श्रुतेः ॥ ४२ ॥

इन्द्रियद्वारतश्चित्ते बहिर्धावति सत्यपि।
ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥ १ ॥

इति श्रीसुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः।

---

म० टी०—पूर्वाध्याये नानाविभूतीरुक्त्वा "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति विश्वात्मकं पारमेश्वरं रूपं भगवताऽन्तेऽभिहितं श्रुत्वा परमोत्कण्ठितस्तत्साक्षात्कर्तुमिच्छन्पूर्वोक्तमभिनन्दन्—

**अर्जुन उवाच—**

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ॥**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

मदनुग्रहाय शोकनिवृत्त्युपकाराय परमं निरतिशयपुरुषार्थपर्यवसायि गुह्यं गोप्यं यस्मै कस्मैचिद्वक्तुमनर्हमपि अध्यात्मसंज्ञितमध्यात्ममितिशब्दितमात्मानात्मविवेकविषयमशोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यायपर्यन्तं त्वंपदार्थप्रधानं यत्त्वया परमकारुणिकेन सर्वज्ञेनोक्तं वचो वाक्यं तेन वाक्येनाहमेषां हन्ता मयैते हन्यन्त इत्यादिविविधविपर्यासलक्षणो मोहोऽ-

---

१ ङ. तृप्यति। ञ. तिष्ठति। २ ङ. ञ. °धूलिमनो। ३ क. ञ. °भन्नाने°। ४ क. ख. ग. °न समदृष्टि°।

४१

यमनुभवसाक्षिको विगतो विनष्टो मम, तत्रासकृदात्मनः सर्वविक्रियाशून्यत्वोक्तेः ॥ १ ॥

**श्री० टी०**—विभूतिवैभवं प्रोच्य कृपया परया हरिः ।
दिदृक्षोरर्जुनस्याथ विश्वरूपमदर्शयत् ॥

पूर्वाध्यायान्ते " विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् " इति विश्वात्मकं पारमेश्वरं रूपमुपक्षिप्तं तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच मदनुग्रहायेति चतुर्भिः—मदनुग्रहाय शोकनिवृत्तये परमं परमार्थनिष्ठं गुह्यं गोप्यमपि अध्यात्ममितिसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचोऽशोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यपर्यन्तं यद्वाक्यं तेन ममायं मोहोऽहं हन्तैते हन्यन्त इत्यादिलक्षणो भ्रमो विगतो विनष्ट आत्मनः कर्तृत्वाद्यभावोक्तेः ॥ १ ॥

**म० टी०**—तथा सप्तमादारभ्य दशमपर्यन्तं तत्पदार्थनिर्णयप्रधानमपि भगवतो वचनं मया श्रुतमित्याह—

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

भूतानां भवाप्ययावुत्पत्तिप्रलयौ त्वत्त एव भवन्तौ त्वत्त एव विस्तरशो मया श्रुतौ न तु संक्षेपेणासकृदित्यर्थः । कमलस्य पत्रे इव दीर्घे रक्तान्ते परममनोरमे अक्षिणी यस्य तव स त्वं हे कमलपत्राक्ष । अतिसौन्दर्यातिशयोल्लेखोऽयं प्रेमातिशयात् । न केवलं भवाप्ययौ त्वत्तः श्रुतौ महात्मनस्तव भावो माहात्म्यमनतिशयैश्वर्यं विश्वसृष्ट्यादिकर्तृत्वेऽप्यविकारित्वं शुभाशुभकर्मकारयितृत्वेऽप्यवैषम्यं बन्धमोक्षादिविचित्रफलदातृत्वेऽप्यसङ्गौदासीन्यमन्यदपि सर्वात्मत्वादि सोपाधिकं निरुपाधिकमपि चाव्ययमक्षयं मया श्रुतमिति परिणतमनुवर्तते चकारात् ॥ २ ॥

**श्री० टी०**—किं च—**भवाप्ययाविति** । भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशादेव भवत इति श्रुतौ मया " अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा " इत्यादौ विस्तरशः पुनः पुनः । कमलपत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव हे कमलपत्राक्ष माहात्म्यमपि चाव्ययमक्षयं श्रुतम्, विश्वसृष्ट्यादिकर्तृत्वेऽपि सर्वनियन्तृत्वेऽपि शुभाशुभकर्मकारयितृत्वेऽपि बन्धमोक्षादिविचित्रफलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्त्वं च श्रुतम् । अव्यक्तं व्यक्तिमापन्नं मन्यन्ते, मया ततमिदं सर्वं, न च मां तानि कर्माणि निबध्नन्ति, समोऽहं सर्वभूतेषु, इत्यादिना । अतस्त्वत्परन्त्रत्वादपि जीवानामहं कर्तेत्यादिर्मदीयो मोहो विगत इति भावः ॥ २ ॥

---

१ छ. भगवत ए° । २ च. °वत ए° । ३ ज. °पेण स° ।

एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ॥
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

म० टी०—हे परमेश्वर यथा येन प्रकारेण सोपाधिकेन निरुपाधिकेन च निरतिशयैश्वर्येणाऽऽत्मानं त्वमात्थ कथयसि त्वमेवमेतन्नान्यथा। त्वद्वचसि कुत्रापि ममाविश्वासशङ्का नास्त्येवेत्यर्थः। यद्यप्येवं तथाऽपि कृतार्थीबुभूषया द्रष्टुमिच्छामि ते तव रूपमैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमद्भुतं हे पुरुषोत्तम। संबोधनेन त्वद्वचस्यविश्वासो मम नास्ति दिदृक्षा च महती वर्तत इति सर्वज्ञत्वात्त्वं जानासि सर्वान्तर्यामित्वाच्चेति सूचयति ॥ ३ ॥

श्री० टी०—किं च—एवमिति। भवाप्ययौ हि भूतानामित्यादि मया श्रुतम्। यथा चेदानीमात्मानं त्वमात्थ विष्टभ्याहमिदं कृत्स्नमित्येवं कथयासि हे परमेश्वरैवमेतत्। अत्राप्यविश्वासो मम नास्तीत्यर्थः। तथाऽपि हे पुरुषोत्तम तवैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं त्वद्रूपं कौतूहलादहं द्रष्टुमिच्छामि ॥ ३ ॥

म० टी०—द्रष्टुमयोग्ये कुतस्ते दिदृक्षेत्याशङ्क्याऽऽह—

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥
योगेश्वर ततो मे त्वं दर्शयाऽऽत्मानमव्ययम् ॥ ४ ॥

प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेष्विति प्रभुः, हे प्रभो सर्वस्वामिन्। तत्तवैश्वरं रूपं मयाऽर्जुनेन द्रष्टुं शक्यमिति यदि मन्यसे जानासीच्छसि वा हे योगेश्वर सर्वेषामणिमादिसिद्धिशालिनां योगानां योगिनामीश्वर ततस्त्वदिच्छावशादेव मे मह्यमत्यर्थमर्थिने त्वं परमकारुणिको दर्शय चाक्षुषज्ञानविषयी कारयाऽऽत्मानमैश्वररूपविशिष्टमव्ययमक्षयम् ॥ ४ ॥

श्री० टी० न चाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यम्, किं तर्हि—मन्यस इति। योगिन एव योगास्तेषामीश्वर मयाऽर्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपवन्तमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥

म० टी०—एवमत्यन्तभक्तेनार्जुनेन प्रार्थितः सन्—

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

अत्र क्रमेण श्लोकचतुष्टयेऽपि पश्येत्यावृत्त्याऽत्यद्भुतरूपाणि दर्शयिष्यामि त्वं सावधानो भवेत्यर्जुनमभिमुखी करोति भगवान्। शतशोऽथ सहस्रश इत्यपरिमितानि तानि च

नानाविधान्यनेकप्रकाराणि दिव्यान्यत्यद्भुतानि नाना विलक्षणा वर्णा नीलपीतादिप्रकारास्तथाऽऽकृतयश्चावयवसंस्थानविशेषा येषां तानि नानावर्णाकृतीनि च मे मम रूपाणि पश्य। अर्हे लोट्। द्रष्टुमर्हो भव हे पार्थ ॥ ५ ॥

श्री० टी०—एवं प्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन्सावधानो भवेत्येवं श्रीभगवानुवाच पश्येति चतुर्भिः—रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनम्। अपरिमितान्यनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य। वर्णाः शुक्लकृष्णाद्य आकृतयोऽवयवसंनिवेशविशेषा नानाऽनेके वर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि च ॥५॥

म० टी०—दिव्यानि रूपाणि पश्येत्युक्त्वा तान्येव लेशतोऽनुक्रामति द्वाभ्याम्—

**पश्याऽऽदित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ॥**
**बहून्यदृष्टपूर्वाणि पश्याऽऽश्चर्याणि भारत ॥ ६ ॥**

पश्याऽऽदित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतः सप्तसप्तकानेकोनपञ्चाशत्। तथाऽन्यानपि देवानित्यर्थः। बहून्यन्यान्यदृष्टपूर्वाणि पूर्वमदृष्टानि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्पश्याऽऽश्चर्याण्यद्भुतानि हे भारत। अत्र शतशोऽथ सहस्रशः। नानाविधानीत्यस्य विवरणं बहूनीति आदित्यानित्यादि च। अदृष्टपूर्वाणि दिव्यानीत्यस्य, आश्चर्याणीति नानावर्णाकृतीनीत्यस्येति द्रष्टव्यम् ॥ ६ ॥

श्री० टी०—तान्येवाऽऽह—पश्येति। आदित्यादीन्मम देहे पश्य। मरुत एकोनपञ्चाशद्देवविशेषान्। अदृष्टपूर्वाणि त्वया वाऽन्येन वा पूर्वमदृष्टानि रूपाणि। आश्चर्याण्यत्यद्भुतानि ॥ ६ ॥

म० टी०—न केवलमेतावदेव, समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह—

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

इहास्मिन्मम देह एकस्थमेकस्मिन्नेवावयवरूपेण स्थितं जगत्कृत्स्नं समस्तं सचराचरं जङ्गमस्थावरसहितं तत्र तत्र परिभ्रमता वर्षकोटिसहस्रेणापि द्रष्टुमशक्यमद्याधुनैव पश्य हे गुडाकेश। यच्चान्यज्जयपराजयादिकं द्रष्टुमिच्छसि तदपि संदेहोच्छेदाय पश्य ॥ ७ ॥

श्री० टी०—किंच—इहेति। तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन्मम देहेऽवयवरूपेणैकत्रैव स्थितमद्याधुनैव

---

१ क. ख. ग. घ. ङ. ञ. °स्तेवमर्जुनमभिमुखी करोति श्री°। छ. ज. झ. °स्तेवमर्जुनमभिमुखी करोति प°।

पश्य । यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं जयपराजयादिकं च यदप्यन्यद्द्रष्टुमिच्छसि तत्सर्वं पश्य ॥ ७ ॥

म० टी०—यत्तूक्तं "मन्यसे यदि तच्छक्यं मया द्रष्टुम्" इति तत्र विशेषमाह—

**नतु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥**

अनेनैव प्राकृतेन स्वचक्षुषा स्वभावसिद्धेन चक्षुषा मां दिव्यरूपं द्रष्टुं न तु शक्यसे न शक्नोषि तु एव । शक्ष्यस इति पाठे शक्तो न भविष्यसीत्यर्थः । सौवादिकस्यापि शक्नोतेर्दैवादिकः श्यंश्छान्दस इति वा । दिवादौ पाठो वेत्येव सांप्रदायिकम् । तर्हि त्वां द्रष्टुं कथं शक्नुयामत आह—दिव्यमप्राकृतं मम दिव्यरूपदर्शनक्षमं ददामि ते तुभ्यं चक्षुस्तेन दिव्येन चक्षुषा पश्य मे योगमघटनघटनासामर्थ्यातिशयमैश्वरमीश्वरस्य समासाधारणम् ॥८॥

श्री० टी०—यदुक्तमर्जुनेन मन्यसे यदि तच्छक्यमिति तत्राऽऽह—**न त्विति ।** अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि । अतोऽहं दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि । ममैश्वरमसाधारणं योगं युक्तिमघटितघटनासामर्थ्यं पश्य ॥ ८ ॥

म० टी०—भगवानर्जुनाय दिव्यं रूपं दर्शितवान् । स च तद्दृष्ट्वा विस्मयाविष्टो भगवन्तं विज्ञापितवानितीमं वृत्तान्तमेवमुक्त्वेत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति—

**संजय उवाच—**

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ॥**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

एवं नतु मां शक्यसे द्रष्टुमनेन चक्षुषाऽतो दिव्यं ददामि ते चक्षुरित्युक्त्वा ततो दिव्यचक्षुःप्रदानादनन्तरं हे राजन्धृतराष्ट्र स्थिरो भव श्रवणाय । महान्सर्वोत्कृष्टश्चासौ योगेश्वरश्चेति महायोगेश्वरो हरिर्भक्तानां सर्वक्लेशापहारी भगवान्दर्शनायोग्यमपि दर्शयामास पार्थायैकान्तभक्ताय परमं दिव्यं रूपमैश्वरम् ॥ ९ ॥

श्री० टी०—एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् । तच्च रूपं दृष्ट्वाऽर्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थमेवमुक्त्वेत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच—**एवमिति ।** हे राजन्धृतराष्ट्र महाश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥

म० टी०—तदेव रूपं विशिनष्टि—

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

अनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे, अनेकानामद्भुतानां विस्मयहेतूनां दर्शनं यस्मिन्, अनेकानि दिव्यान्याभरणानि भूषणानि यस्मिन्, दिव्यान्यनेकान्युद्यतान्यायुधानि अस्त्राणि यस्मिंस्तत्तथारूपम् ॥ १० ॥

श्री० टी०—कथंभूतं तदित्यत आह—अनेकेति । अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत् । अनेकानामद्भुतानां दर्शनं यस्मिंस्तत् । अनेकानि दिव्याभरणानि यस्मिंस्तत् । दिव्यान्यनेकानि उद्यतानि आयुधानि च यस्मिंस्तत् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

म० टी०—दिव्यानि माल्यानि पुष्पमयानि रत्नमयानि च तथा दिव्याम्बराणि वस्त्राणि च ध्रियन्ते येन तद्दिव्यमाल्याम्बरधरं, दिव्यो गन्धोऽस्येति दिव्यगन्धस्तद्वदनुलेपनं यस्य तत्, सर्वाश्चर्यमयमनेकाद्भुतप्रचुरं, देवं द्योतनात्मकम्, अनन्तमपरिच्छिन्नं, विश्वतः सर्वतो मुखानि यस्मिंस्तद्रूपं दर्शयामासेति पूर्वेण संबन्धः । अर्जुनो ददर्शेत्यध्याहारो वा ॥ ११ ॥

श्री० टी०—किं च—दिव्येति । दिव्यानि माल्यान्यम्बराणि च धारयतीति तथा । दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत् । सर्वाश्चर्यमयमनेकाश्चर्यप्रायम् । देवं द्योतनात्मकम् । अनन्तमपरिच्छिन्नम् । विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

म० टी०—देवमित्युक्तं विवृणोति—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

दिवि अन्तरिक्षे सूर्याणां सहस्रस्यापरिमितसूर्यसमूहस्य युगपदुदितस्य युगपदुत्थिता भाः प्रभा यदि भवेत्तदा सा तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी तुल्या यदि स्याद्यदि वा न स्यात्ततोऽपि नूनं विश्वरूपस्यैव भा अतिरिच्येतेत्यहं मन्ये, अन्या तूपमा नास्त्येवेत्यर्थः । अत्राविद्यमानाध्यवसायात्तदभावेनोपमाभावपरादभूतोपमारूपेयमतिशयोक्तिरुत्प्रेक्षां व्यञ्जयन्ती सर्वथा निरुपमत्वमेव व्यनक्ति उभौ यदि व्योम्नि पृथक्प्रवाहावित्यादिवत् ॥ १२ ॥

श्री० टी०—विश्वरूपदीप्तेर्निरुपमत्वमाह—दिवीति । दिव्याकाशे सूर्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत्तर्हि सा तदा महात्मनो विश्वरू-

पस्य भासः प्रभायाः कथंचित्सदृशी स्यात्, नान्योपमाऽस्तीत्यर्थः। तथाभूतं रूपं दर्शयामासेति पूर्वेणैवान्वयः॥ १२॥

म० टी०—"इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्" इति भगवदाज्ञप्तमप्यनुभूतवानर्जुन इत्याह—

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा॥**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा॥ १३॥**

एकस्थमेकत्र स्थितं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिनानाप्रकारैरपश्यद्देवदेवस्य भगवतः। तत्र विश्वरूपे शरीरे पाण्डवोऽर्जुनस्तदा विश्वरूपाश्चर्यदर्शनदशायाम्॥ १३॥

श्री० टी०—ततः किं वृत्तमित्यपेक्षायामाह संजयः—तत्रेति। अनेकधा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे तदवयवत्वेनैकत्रैव पृथक्पृथगवस्थितं तदा पाण्डवोऽर्जुनोऽपश्यत्॥ १३॥

म० टी०—एवमद्भुतदर्शनेऽप्यर्जुनो न बिभयांचकार, नापि नेत्रे संचचार, नापि संभ्रमात्कर्तव्यं विसस्मार, नापि तस्माद्देशादपससार, किं त्वतिधीरत्वात्तत्कालोचितमेव व्यवजहार महति चित्तक्षोभेऽपीत्याह—

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः॥**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत॥ १४॥**

ततस्तद्दर्शनादनन्तरं विस्मयेनाद्भुतदर्शनप्रभावेनालौकिकचित्तचमत्कारविशेषेणाऽऽविष्टो व्याप्तः। अत एव हृष्टरोमा पुलकितः सन्स प्रख्यातमहादेवसङ्ग्रामादिप्रभावो धनंजयो युधिष्ठिरराजसूय उत्तरगोग्रहे च सर्वान्राज्ञो जित्वा धनमाहृतवानिति प्रथितमहापराक्रमोऽतिधीरः साक्षादग्निरिति वा महातेजस्वित्वात्, देवं तमेव विश्वरूपधरं नारायणं शिरसा भूमिलग्नेन प्रणम्य प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा नमस्कृत्य कृताञ्जलिः संपुटीकृतहस्तयुगः सन्नभाषतोक्तवान्। अत्र विस्मयाख्यस्थायिभावस्यार्जुनगतस्याऽऽलम्बनविभावेन भगवता विश्वरूपेणोद्दीपनविभावेनासकृत्तद्दर्शनेनानुभावेन सात्विकरोमहर्षेण नमस्कारेणाञ्जलिकरणेन च व्यभिचारिणा चानुभावाक्षिप्तेन वा धृतिमतिहर्षवितर्कादिना परिपोषात्सवासनानां श्रोतॄणां तादृशश्चित्तचमत्कारोऽपि तद्भेदानध्यवसायात्परिपोषं गतः परमानन्दास्वादरूपेणाद्भुतरसो भवतीति सूचितम्॥ १४॥

---

१ क. °र्वान्वीराञ्जित्वा। ख. घ. ङ. ज. म. °र्वाञ्जित्वा। २ क. छ. 'न चान्य°'। ३ ख. घ. ङ. च. छ. ज. झ. ञ. °न धृ°।

श्री० टी०—एवं दृष्ट्वा किं कृतवानित्यत आह—तत इति । ततो दर्शनानन्तरं विस्मयेनाऽऽविष्टो व्याप्तः सन्हृष्टान्युत्पुलकितानि रोमाणि यस्य स धनंजयो देवं तमेव शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वाऽभाषतोक्तवान् ॥ १४ ॥

म० टी०—यद्भगवता दर्शितं विश्वरूपं तद्भगवद्दत्तेन दिव्येन चक्षुषा सर्वलोकाद्भुतमपि पश्याम्यहो मम भाग्यप्रकर्ष इति स्वानुभवमाविष्कुर्वन्—

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ॥
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

पश्यामि चाक्षुषज्ञानविषयी करोमि हे देव तव देहे विश्वरूपे देवान्वस्वादीन्सर्वान्, तथा भूतविशेषाणां स्थावराणां जङ्गमानां च नानासंस्थानानां संघान्समूहान्, तथा ब्रह्माणं चतुर्मुखमीशमीशितारं सर्वेषां कमलासनस्थं पृथ्वीपद्ममध्ये मेरुकर्णिकासनस्थं भगवन्नाभिकमलासनस्थमिति वा । तथा—ऋषींश्च सर्वान्वसिष्ठादीन्ब्रह्मपुत्रान्, उरगांश्च दिव्यान्प्राकृतान्वासुकिप्रभृतीन्पश्यामीति सर्वत्रान्वयः ॥ १५ ॥

श्री० टी०—भाषणमेवाऽऽह पश्यामीति सप्तदशभिः—हे देव तव देहे देवानादित्यादीन्पश्यामि । तथा सर्वान्भूतविशेषाणां जरायुजाण्डजादीनां संघांश्च । तथा दिव्यानृषीन्वसिष्ठादीनुरगांश्च तक्षकादीन् । तथा तेषां देवादीनामीशं स्वामिनं ब्रह्माणम्[1] । कथंभूतम् । कमलासनस्थं पृथ्वीपद्मकर्णिकायां मेरौ स्थितम् । यद्वा त्वन्नाभिपद्मासनस्थम् ॥ १५ ॥

म० टी०—यत्र भगवद्देहे सर्वमिदं दृष्टवान्, तमेव विशिनष्टि—

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा* सर्वतोनन्तरूपम् ॥
नान्तं न मध्यं न पुनस्तवाऽऽदिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

---

* श्रीधरटीकामूलादर्शपुस्तकेषु त्वामिति पाठः ।

---

1 क. ख. ग. ङ. च. छ. ज. झ. ञ. °ह्माणं च । क° ।

बाहव उदराणि वक्त्राणि नेत्राणि चानेकानि यस्य तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्रानन्तानि रूपाणि यस्येति तम्। तव तु पुनर्नान्तमवसानं न मध्यं नाप्यादिं पश्यामि सर्वगतत्वात्, हे विश्वेश्वर हे विश्वरूप संबोधनद्वयमतिसंभ्रमात्॥१६॥

**श्री० टी०**—किं च—**अनेकेति**। अनेकानि बाह्वादीनि यस्य तादृशं त्वां पश्यामि। अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि। तव तु अन्तं मध्यमादिं च न पश्यामि सर्वगतत्वात्॥१६॥

**म० टी०**—तमेव विश्वरूपं भगवन्तं प्रकारान्तरेण विशिनष्टि—

**किरीटिनं गदिनं चक्रिणं च**
**तेजोराशिं सर्वतोदीप्तिमन्तम्॥**
**पश्यामि त्वां दुर्निरीक्षं* समन्ता-**
**द्दीप्तानलार्कद्युतिमप्रमेयम्॥१७॥**

किरीटगदाचक्रधारिणं च सर्वतोदीप्तिमन्तं तेजोराशिं च। अत एव दुर्निरीक्षं दिव्येन चक्षुषा विना निरीक्षितुमशक्यम्। सयकारपाठे दुःशब्दोऽपह्नववचनः। अनिरीक्ष्यमिति यावत्। दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तमप्रमेयमित्थमयमिति परिच्छेत्तुमशक्यं त्वां समन्तात्सर्वतः पश्यामि दिव्येन चक्षुषा। अतोऽधिकारिभेदाद्दुर्निरीक्षं पश्यामीति न विरोधः॥१७॥

**श्री० टी०**—किं च—**किरीटिनमिति**। किरीटिनं मुकुटवन्तं गदिनं गदावन्तं चक्रिणं चक्रवन्तं च। सर्वतोदीप्तिमन्तं तेजःपुञ्जरूपं च। तथा दुर्निरीक्ष्यं द्रष्टुमशक्यम्। तत्र हेतुः—दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तम्। अत एवाप्रमेयमेवंभूत इति निश्चेतुमशक्यं त्वां समन्ततः पश्यामि॥१७॥

**म० टी०**—एवं तवातर्क्यनिरतिशयैश्वर्यदर्शनादनुमिनोमि—

**त्वमक्षरं परमं वेदितव्यं**
**त्वमस्य विश्वस्य परं निधानम्॥**
**त्वमव्ययः शाश्वतधर्मगोप्ता**
**सनातनस्त्वं पुरुषो मतो मे॥१८॥**

---

* श्रीधरटीकामूले दुर्निरीक्ष्यमिति पाठः।

---

१ क. ग. झ. न. 'रीक्ष्यं स°'।

त्वमेवाक्षरं परमं ब्रह्म वेदितव्यं मुमुक्षुभिर्वेदान्तश्रवणादिना । त्वमेवास्य विश्वस्य परं प्रकृष्टं निधीयतेऽस्मिन्निति निधानमाश्रयः । अत एव त्वमव्ययो नित्यः । शाश्वतस्य नित्यवेदप्रतिपाद्यतयाऽस्य धर्मस्य गोप्ता पालयिता । शाश्वतेति संबोधनं वा । तस्मिन्पक्षेऽव्ययो विनाशरहितः । अत एव सनातनश्चिरंतनः पुरुषो यः परमात्मा स एव त्वं मे मतो विदितोऽसि ॥ १८ ॥

**श्री० टी०**—यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्—**त्वमिति** । त्वमेवाक्षरं परमं ब्रह्म । कथंभूतं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यम् । त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्ट आश्रयः । अत एव त्वमव्ययो नित्यः शाश्वतस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरंतनः पुरुषो मम संमतोऽसि ॥ १८ ॥

**म० टी०**—किंच—

**अनादिमध्यान्तमनन्तवीर्य-**
**मनन्तबाहुं शशिसूर्यनेत्रम् ॥**
**पश्यामि त्वा* दीप्तहुताशवक्त्रं**
**स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

आदिरुत्पत्तिर्मध्यं स्थितिरन्तो विनाशस्तद्रहितमनादिमध्यान्तम् । अनन्तं वीर्यं प्रभावो यस्य तम् । अनन्ता बाहवो यस्य तम् । उपलक्षणमेतन्मुखादीनामपि । शशिसूर्यौ नेत्रे यस्य तम् । दीप्तो हुताशो वक्त्रं यस्य वक्त्रेषु यस्येति वा तम् । स्वतेजसा विश्वमिदं तपन्तं संतापयन्तं त्वा त्वां पश्यामि ॥ १९ ॥

**श्री० टी०**—किंच—**अनादीति** । अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् । अनन्तं वीर्यं प्रभावो यस्य तम् । अनन्तबाहुमनन्ता वीर्यवन्तो बाहवो यस्य तम् । शशिसूर्यौ नेत्रे यस्य तादृशं त्वां पश्यामि । तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तम् । स्वतेजसेदं विश्वं तपन्तं संतापयन्तं पश्यामि ॥ १९ ॥

**म० टी०**—प्रकृतस्य भगवद्रूपस्य व्याप्तिमाह—

**द्यावापृथिव्योरिदमन्तरं हि**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥**
**दृष्ट्वाऽद्भुतं +रूपमिदं तवोग्रं**
**लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

* श्रीधरटीकामूले त्वामिति पाठः । + रूपमुग्रं तवेदमिति श्रीधरटीकामूलपाठः ।

१ ख. ग. घ. ङ. च. छ ज. झ. ञ. °पमुग्रं तवेदं लो° ।

द्यावापृथिव्योरिदमन्तरमन्तारिक्षं हि एव त्वयैवैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः। दृष्ट्वाऽद्भुतमत्यन्तविस्मयकरमिदमुग्रं दुरधिगमं महातेजस्वित्वात्तव रूपमुपलभ्य लोकत्रयं प्रव्यथितमत्यन्तभीतं जातं हे महात्मन्साधूनामभयदायक। इतः परमिदमुपसंहरेत्यभिप्रायः॥ २०॥

**श्री० टी०**—किं च—**द्यावापृथिव्योरिति**। द्यावापृथिव्योरिदमन्तरं हि अन्तरिक्षं त्वयैकेन व्याप्तम्। दिशश्च सर्वा व्याप्ताः। अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पूर्वस्यैवानुषङ्गः॥ २०॥

**म० टी०**—अधुना भूभारसंहारकारित्वमात्मनः प्रकटयन्तं भगवन्तं पश्यन्नाह—

> **अमी हि त्वा* सुरसंघा विशन्ति**
> **केचिद्भीताः प्राञ्जलयो गृणन्ति॥**
> **स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः**
> **स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥ २१॥**

अमी हि सुरसंघा वस्वादिदेवगणा भूभारावतारार्थं मनुष्यरूपेणावतीर्णा युध्यमानाः सन्तस्त्वा त्वां विशन्ति प्रविशन्तो दृश्यन्ते। एवमसुरसंघा इति पदच्छेदेन भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यम्। एवमुभयोरपि सेनयोः केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयो गृणन्ति स्तुवन्ति त्वाम्। एवं प्रत्युपस्थिते युद्धे उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु सर्वस्य जगत इत्युक्त्वा महर्षिसिद्धसंघा नारदप्रभृतयो युद्धदर्शनार्थमागता विश्वविनाशपरिहाराय स्तुवन्ति त्वां स्तुतिभिर्गुणोत्कर्षप्रतिपादिकाभिर्वाग्भिः पुष्कलाभिः परिपूर्णार्थाभिः॥ २१॥

**श्री० टी०**—किं च—**अमी हीति**। अमी सुरसंघा भीताः सन्तस्त्वां विशन्ति शरणं प्रविशन्ति। तेषां मध्ये केचिदतिभीता दूरत एव स्थित्वा कृतसंपुटकरयुगुलाः सन्तो गृणन्ति जय जय रक्ष रक्षेति प्रार्थयन्ते। स्पष्टमन्यत्॥ २१॥

**म० टी०**—किं चान्यत्—

> **रुद्रादित्या वसवो ये च साध्या**
> **विश्वेऽश्विनौ मरुतश्चोष्मपाश्च॥**
> **गन्धर्वयक्षासुरसिद्धसंघा**
> **वीक्षन्ते त्वा+ विस्मिताश्चैव सर्वे॥ २२॥**

---

* श्रीधरटीकामूलस्थस्त्वामिति पाठः। + श्रीधरटीकामूलस्थस्त्वामिति पाठः।

---

१ ख. ग. घ. ङ. च. छ. झ. म. °यैके°। २ ज. °तीर्णोऽसौरयबुध्य°।

रुद्राश्चाऽऽदित्याश्च वसवो ये च साध्या नाम देवगणा विश्वे तुल्यविभक्तिकविश्वदेवशब्दाभ्यामुच्यमाना देवगणा अश्विनौ नासत्यदस्रौ मरुत एकोनपञ्चाशद्देवगणा ऊष्मपाश्च पितरो गन्धर्वाणां यक्षाणामसुराणां सिद्धानां च जातिभेदानां संघाः समूहा वीक्षन्ते पश्यन्ति त्वा त्वां तादृशाद्भुतदर्शनात्ते सर्वे एव विस्मिताश्च विस्मयमलौकिकचमत्कारविशेषमापद्यन्ते च ॥ २२ ॥

श्री० टी०—किं च—रुद्रेति । रुद्राश्चाऽऽदित्याश्च वसवश्च ये च साध्या नाम देवा विश्वे देवा अश्विनौ देवौ मरुतो मरुद्गणा ऊष्माणं पिबन्तीत्यूष्मपाः पितरः, "ऊष्मभागा हि पितरः" इत्यादिश्रुतेः । स्मृतिश्च—

"यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः ।
पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः" इति ॥

गन्धर्वाश्च यक्षाश्चासुराश्च विरोचनादयः सिद्धानां संघाश्च ते सर्वे एव हि विस्मिताः सन्तस्त्वां वीक्षन्त इत्यन्वयः ॥ २२ ॥

म० टी०—लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति—

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥

हे महाबाहो ते तव रूपं दृष्ट्वा लोकाः सर्वेऽपि प्राणिनः प्रव्यथितास्तथाऽहं प्रव्यथितो भयेन । कीदृशं ते रूपं महदतिप्रमाणं, बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत्, बहून्युदराणि यस्मिंस्तत्, बहुभिर्दंष्ट्राभिः करालमतिभयानकं दृष्ट्वैव मत्सहिताः सर्वे लोका भयेन पीडिता इत्यर्थः ॥ २३ ॥

श्री० टी०—किं च—रूपमिति । हे महाबाहो महदत्यूर्जितं तव रूपं दृष्ट्वा लोकाः सर्वे प्रव्यथिता अतिभीताः । तथाऽहं च प्रव्यथितोऽस्मि । कीदृशं रूपं दृष्ट्वा बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत् । बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत् । बहूनि उदराणि यस्मिंस्तत् । बहुभिर्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः ॥ २३ ॥

म० टी—भयानकत्वमेव प्रपञ्चयति—

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ॥
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

न केवलं प्रव्यथित एवाहं त्वां दृष्ट्वा किं तु प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यं देहेन्द्रियादिधारणसामर्थ्यं शमं च मनःप्रसादं न विन्दामि न लभे हे विष्णो । त्वां कीदृशं नभःस्पृशमन्तरिक्षव्यापिनं दीप्तं प्रज्वलितमनेकवर्णं भयंकरनानासंस्थानयुक्तं व्यात्ताननं विवृतमुखं दीप्तविशालनेत्रं प्रज्वलितविस्तीर्णचक्षुषं त्वां दृष्ट्वा हि एव प्रव्यथितान्तरात्माऽहं धृतिं शमं च न विन्दामीत्यन्वयः ॥ २४ ॥

श्री० टी०—न केवलं भीतोऽहमित्येतावदेव, अपि तु—**नभःस्पृशमिति** । नभः स्पृशतीति नभःस्पृक्तमन्तरिक्षव्यापिनमित्यर्थः । दीप्तं तेजोयुक्तम् । अनेके वर्णा यस्य तमनेकवर्णम् । व्यात्तानि विवृतान्याननानि यस्य तम् । दीप्तानि विशालानि नेत्राणि यस्य तम् । एवंभूतं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यमुपशमं च न लभे ॥ २४ ॥

**दंष्ट्राकरालानि च ते मुखानि**
**दृष्ट्वैव कालानलसंनिभानि ॥**
**दिशो न जाने न लभे च शर्म**
**प्रसीद देवेश जगन्निवास ॥ २५ ॥**

म० टी०—दंष्ट्राभिः करालानि विकृतत्वेन भयंकराणि प्रलयकालानलसदृशानि च ते मुखानि दृष्ट्वैव न तु तानि प्राप्य भयवशेन दिशः पूर्वापरादिविवेकेन न जाने । अतो न लभे च शर्म सुखं त्वद्रूपदर्शनेऽपि । अतो हे देवेश हे जगन्निवास प्रसीद प्रसन्नो भव मां प्रति । यथा भयाभावेन त्वद्दर्शनजं सुखं प्राप्नुयामिति शेषः ॥ २५ ॥

श्री० टी०—किं च—**दंष्ट्रेति** । भो देवेश तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि शर्म च सुखं न लभे । भो जगन्निवास प्रसन्नो भव । कीदृशानि मुखानि दंष्ट्राभिः करालानि । कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥

म० टी०—अस्माकं जयं परेषां पराजयं च सर्वदा द्रष्टुमिष्टं पश्य मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसीति भगवदादिष्टमधुना पश्यामीत्याह पञ्चभिः—

**अमी च त्वां धृतराष्ट्रस्य पुत्राः**
**सर्वे सहैवावनिपालसंघैः ॥**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ**
**सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

---

१ घ. झ. °नि दृष्ट्वा दं° । २ क. °ना यत्पश्या° । ड. °न्म यथा प° ।

अमी च धृतराष्ट्रस्य पुत्रा दुर्योधनप्रभृतयः शतं सोदरा युयुत्सुं विना सर्वे त्वां त्वरमाणा विशन्तीत्यग्रेतनेनान्वयः । अतिभयसूचकत्वेन क्रियापदन्यूनत्वमत्र गुण एव । सहैवावनिपालानां शल्यादीनां राज्ञां संघैस्त्वां विशन्ति । न केवलं दुर्योधनादय एव विशन्ति किं तु अजेयत्वेन सर्वैः संभावितोऽपि भीष्मो द्रोणः सूतपुत्रः कर्णस्तथाऽसौ सर्वदा मम विद्वेष्टा सहास्मदीयैरपि परकीयैरिव धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैस्त्वां विशन्तीति संबन्धः॥२६॥

श्री० टी०—यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन्सङ्ग्रामे भाविजयपराजयादिकं च मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह—अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वेऽवनिपालानां जयद्रथादीनां राज्ञां संघैः सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः । तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रः कर्णश्च । न केवलं त एव विशन्ति अपि तु प्रतियोद्धारो येऽस्मदीया योधमुख्याः शिखण्डिधृष्टद्युम्नादयस्तैः सह ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ॥
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

म० टी०—अमी धृतराष्ट्रपुत्रप्रभृतयः सर्वेऽपि ते तव दंष्ट्राकरालानि भयानकानि वक्त्राणि त्वरमाणा विशन्ति । तत्र च केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिर्विशिष्टा दशनान्तरेषु विलग्ना विशेषेण संलग्ना दृश्यन्ते मया सम्यगसंदेहेन ॥ २७ ॥

श्री० टी०—वक्त्राणीति । य एते सर्वे त्वरमाणा धावन्तस्तव दंष्ट्राभिर्विकृतानि भयंकराणि वक्त्राणि विशन्ति तेषां मध्ये केचिच्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसंधिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥

म० टी०—राज्ञां भगवन्मुखप्रवेशने निदर्शनमाह—

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ॥
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो* ज्वलन्ति ॥ २८ ॥

---

* श्रीधरटीकामूले "अभिविज्वलन्ति" इति पाठः ।

१ क. ख. ग. घ. ङ. च. छ. ज. झ. °ति । ए° । २ क. ग. घ. ङ. च. ज. झ. ञ. °भिविज्व° ।

यथा नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां जलानां वेगा वेगवन्तः प्रवाहाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति विशन्ति तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितः सर्वतो ज्वलन्ति। अभिविज्वलन्तीति वा पाठः ॥ २८ ॥

**श्री० टी०—**प्रवेशमेव दृष्टान्तेनाऽऽह—**यथेति**। नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति प्रविशन्ति तथाऽमी ये नरलोकवीरास्तेऽभिविज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

**म० टी०—**अबुद्धिपूर्वकप्रवेशे नदीवेगं दृष्टान्तमुक्त्वा बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—

> **यथा प्रदीप्तं ज्वलनं पतङ्गा**
> **विशन्ति नाशाय समृद्धवेगाः ॥**
> **तथैव नाशाय विशन्ति लोका-**
> **स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

यथा पतङ्गाः शलभाः समृद्धवेगाः सन्तो बुद्धिपूर्वं प्रदीप्तं ज्वलनं विशन्ति नाशाय मरणायैव तथैव नाशाय विशन्ति लोका एते दुर्योधनप्रभृतयः सर्वेऽपि तव वक्त्राणि समृद्धवेगा बुद्धिपूर्वमनायत्या ॥ २९ ॥

**श्री० टी०—**अवशत्वेन प्रवेशे नदीवेगो दृष्टान्त उक्तः। बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—**यथेति**। प्रदीप्तं ज्वलनमग्निं पतङ्गाः शलभा[1] बुद्धिपूर्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि तव मुखानि प्रविशन्ति ॥ २९ ॥

**म० टी०—**योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारमुक्त्वा तदा भगवतस्तद्ग्रासार्थ प्रवृत्तिप्रकारमाह—

> **लेलिह्यसे ग्रसमानः समन्ता-**
> **ल्लोकान्समग्राम्वदनैर्ज्वलद्भिः ॥**
> **तेजोभिरापूर्य जगत्समग्रं**
> **भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥**

एवं वेगेन प्रविशतो लोकान्दुर्योधनादीन्समग्रान्सर्वान्ग्रसमानोऽन्तः प्रवेशयञ्ज्वलद्भिर्वदनैः समन्तात्सर्वतस्त्वं लेलिह्यस आस्वादयसि तेजोभिर्भाभिरापूर्य जगत्समग्रं यस्मात्त्वं

---

१ ग. °र्वकमित्याशयः ॥ २१ ॥ २ ख. ग. घ. ङ. च. छ. ज. झ. °वेगद° । ३ क. ग. सूक्ष्मपक्षिविशेषा।

भाभिर्जगदापूरयासि तस्मात्तवोग्रास्तीव्रा भासो दीप्तयः प्रज्वलतो ज्वलनस्येव प्रतपन्ति संन्तापं जनयन्ति हे विष्णो व्यापनशील ॥ ३० ॥

श्री० टी०—ततः किमत आह—**लेलिह्यस इति** । ग्रसमानो गिलन्समग्रांल्लोकान्सर्वानेतान्वीरान्समन्तात्सर्वतो लेलिह्यसेऽतिशयेन भक्षयसि । कैः, ज्वलद्भिर्वदनैः । किंच हे विष्णो तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समस्तं जगद्व्याप्य तीव्राः सत्यः प्रतपन्ति संतापयन्ति ॥ ३० ॥

म० टी०—यस्मादेवं तस्मात्—

**आख्याहि मे को भवानुग्ररूपो**
**नमोऽस्तु ते देववर प्रसीद ॥**
**विज्ञातुमिच्छामि भवन्तमाद्यं**
**न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

एवमुग्ररूपः क्रूराकारः को भवानित्याख्याहि कथय मे मह्यमत्यन्तानुग्राह्याय । अत एव नमोऽस्तु ते तुभ्यं सर्वगुरवे हे देववर प्रसीद प्रसादं क्रौर्यत्यागं कुरु । विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यं सर्वकारणं, न हि यस्मात्तव सखाऽपि सन्प्रजानामि तव प्रवृत्तिं चेष्टाम् ॥ ३१ ॥

श्री० टी०—यत एवं तस्मात्—**आख्याहीति** । भवानुग्ररूपः क इत्याख्याहि कथय । ते तुभ्यं नमोऽस्तु, हे देववर प्रसीद प्रसन्नो भव । भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि, यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि । एवंभूतस्य तव प्रवृत्तिं वार्तामपि न जानामीति वा ॥ ३१ ॥

म० टी०—एवमर्जुनेन प्रार्थितो यः स्वयं यदर्था च स्वप्रवृत्तिस्तत्सर्वं त्रिभिः श्लोकैः—

**श्रीभगवानुवाच—**

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो**
**लोकान्समाहर्तुमिह प्रवृत्तः ॥**
**ऋतेऽपि त्वा न भविष्यन्ति**
**सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥**

कालः क्रियाशक्त्युपहितः सर्वस्य संहर्ता परमेश्वरोऽस्मि भवामीदानीं प्रवृद्धो वृद्धिं गतः । यदर्थं प्रवृत्तस्तच्छृणु—लोकान्दुर्योधनादीन्समाहर्तुं भक्षयितुं प्रवृत्तो

त्रोऽहमिहास्मिन्काले । मत्प्रवृत्तिं विना कथमेवं स्यादिति चेत्तत्राह—ऋतेऽपि त्वा त्वामर्जुनं योद्धारं विनाऽपि त्वद्व्यापारं विनाऽपि मद्व्यापारेणैव न भविष्यन्ति विनङ्क्ष्यन्ति सर्वे भीष्मद्रोणकर्णप्रभृतयो योद्धुमनर्हत्वेन संभाविता अन्येऽपि येऽवस्थिताः प्रत्यनीकेषु प्रतिपक्षसैन्येषु योधा योद्धारः सर्वेऽपि मया हतत्वादेव न भविष्यन्ति । तत्र तव व्यापारोऽकिंचित्कर इत्यर्थः ॥ ३२ ॥

श्री० टी०—एवं प्रार्थितः सञ्श्रीभगवानुवाच कालोऽस्मीति त्रिभिः—लोकानां क्षयकर्ता प्रवृद्धोऽत्युग्रः कालोऽस्मि लोकान्प्राणिनः संहर्तुमिह लोके प्रवृत्तोऽस्मि । अत ऋतेऽपि त्वा, इति त्वां हन्तारं विनाऽपि न भविष्यन्ति न जीविष्यन्ति । यद्यपि त्वया न हन्तव्या एते तथाऽपि मया कालात्मना ग्रस्ताः सन्तो मरिष्यन्त्येव । के ते, प्रत्यनीकेषु अनीकान्यनीकानि प्रति भीष्मद्रोणादीनां सर्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्वेऽपि ॥ ३२ ॥

म० टी०—यस्मादेवम्—

> तस्मात्त्वमुत्तिष्ठ यशो लभस्व
> जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ॥
> मयैवैते निहताः पूर्वमेव
> निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

तस्मात्त्वद्व्यापारमन्तरेणापि यस्मादेते विनङ्क्ष्यन्त्येव तस्मात्त्वमुत्तिष्ठोद्युक्तो भव युद्धाय देवैरपि दुर्जया भीष्मद्रोणादयोऽतिरथा झटित्येवार्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व । महद्भिः पुण्यैरेव हि यशो लभ्यते । अयत्नतश्च जित्वा शत्रून्दुर्योधनादीन्भुङ्क्ष्व सोपसर्जनत्वेन भोग्यतां प्रापय समृद्धं राज्यमकण्टकम् । एते च तव शत्रवो मयैव कालात्मना निहताः संहतायुषस्त्वदीययुद्धात्पूर्वमेव केवलं तव यशोलाभाय रथाच्च पातिताः । अतस्त्वं निमित्तमात्रमर्जुनेनैते निर्जिता इति सार्वलौकिकव्यपदेशास्पदं भव हे सव्यसाचिन्सव्येन वामेन हस्तेनापि शरान्सचितुं संधातुं शीलं यस्य तादृशस्य तव भीष्मद्रोणादिजयो नासंभावितस्तस्मात्त्वद्व्यापारानन्तरं मया रथात्पात्यमानेष्वेतेषु तवैव कर्तृत्वं लोकाः कल्पयिष्यन्तीत्यभिप्रायः ॥ ३३ ॥

श्री० टी०—यस्मादेवं तस्मादिति । तस्मात्त्वं युद्धायोत्तिष्ठ । देवैरपि दुर्जया भीष्मद्रोणादयोऽर्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व प्राप्नुहि । अयत्नेन शत्रूञ्जित्वा समृद्धं राज्यं भुङ्क्ष्व । एते च तव शत्रवस्त्वदीययुद्धात्पूर्वमेव मयैव कालात्मना निहत-

१ ख. ग. ज. झ. °त्युत्कटः का° ।

प्राया: न तथाऽपि त्वं निमित्तमात्रं भव हे सव्यसाचिन्सव्येन वामेन हस्तेन सचितुं संधातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात्सव्यसाचीत्युच्यते ॥ ३३ ॥

म० टी०—ननु द्रोणो ब्राह्मणोत्तमो धनुर्वेदाचार्यो मम गुरुर्विशेषेण च दिव्यास्त्रसंपन्नस्तथा भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वंद्वयुद्धमुपगम्यापि न पराजितस्तथा यस्य पिता वृद्धक्षत्रस्तपश्चरति मम पुत्रस्य शिरो यो भूमौ पातयिष्यति तस्यापि शिरस्तत्कालं भूमौ पतिष्यतीति स जयद्रथोऽपि जेतुमशक्यः स्वयमपि महादेवाराधनपरो दिव्यास्त्रसंपन्नश्च तथा कर्णोऽपि स्वयं सूर्यसमस्तदाराधनेन दिव्यास्त्रसंपन्नश्च वासवदत्तयाचैकपुरुषघातिन्या मोघीकर्तुमशक्यया शक्त्या विशिष्टस्तथा कृपाश्वत्थामभूरिश्रवःप्रभृतयो महानुभावाः सर्वथा दुर्जया एवैतेषु सत्सु कथं जित्वा शत्रून्राज्यं भोक्ष्ये कथं वा यशो लप्स्य इत्याशङ्कामर्जुनस्यापनेतुमाह तदाशङ्काविषयान्नामभिः कथयन्—

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ॥
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

द्रोणादींस्त्वदाशङ्काविषयीभूतान्सर्वानेव योधवीरान्कालात्मना मया हतानेव त्वं जहि। हतानां हनने को वा परिश्रमः। अतो मा व्यथिष्ठाः कथमेवं शक्ष्यामीति व्यथां मन्निमित्तां पीडां मा गा भयं त्यक्त्वा युध्यस्व, जेतासि जेष्यस्यचिरेणैव रणे सङ्ग्रामे सपत्नान्सर्वानपि शत्रून्। अत्र द्रोणं च भीष्मं च जयद्रथं चेति चकारत्रयेण पूर्वोक्ताजेयत्वशङ्कानूद्यते। तथाशब्देन कर्णोऽपि। अन्यानपि योधवीरानित्यत्रापिशब्देन। तस्मात्कुतोऽपि स्वस्य पराजयं वधनिमित्तं पापं च मा शङ्किष्ठा इत्यभिप्रायः।

"कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हौ"

इत्यत्रेवात्रापि समुदायान्वयानन्तरं प्रत्येकान्वयो द्रष्टव्यः ॥ ३४ ॥

श्री० टी०—"न चैतद्विद्मः कतरन्नो गरीयः" इत्यादिर्या शङ्का साऽपि न कार्येत्याह—द्रोणं चेति। येभ्यस्त्वं शङ्कसे तान्द्रोणादीन्मयैव हतांस्त्वं जहि घातय, मा व्यथिष्ठा भयं मा कार्षीः, सपत्नाञ्शत्रून्रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥

---

१ क. 'तुं शरान्संधा°। २ ख. ग. घ. ङ. च. छ. ज. झ. शीलमस्ये°। ३ क. ख. ङ. छ. °धमुख्यान्।

म० टी०—द्रोणभीष्मजयद्रथकर्णेषु जयाशाविषयेषु हतेषु निराश्रयो दुर्योधनो हत एवेत्यनुसंधाय जयाशां परित्यज्य यदि धृतराष्ट्रः संधिं कुर्यात्तदा शान्तिरुभयेषां भवेदित्यभिप्रायवांस्ततः किं वृत्तमित्यपेक्षायाम्—

संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी॥
नमस्कृत्वा भूय एवाऽऽह कृष्णं
सगद्गदं भीतभीतः प्रणम्य॥ ३५॥

एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा कृताञ्जलिः किरीटीन्द्रदत्तकिरीटः परमवीरत्वेन प्रसिद्धो वेपमानः परमाश्चर्यदर्शनजनितेन संभ्रमेण कम्पमानोऽर्जुनः कृष्णं भक्ताघकर्षणं भगवन्तं नमस्कृत्वा नमस्कृत्य भूयः पुनरप्याहोक्तवान्सगद्गदं भयेन हर्षेण चाश्रुपूर्णनेत्रत्वे सति कफरुद्धकण्ठतया वाचो मन्दत्वसकम्पत्वादिर्विकारः सगद्गदस्तद्युक्तं यथा स्यात्, भीतभीतोऽतिशयेन भीतः सन्पूर्वं नमस्कृत्य पुनरपि प्रणम्यात्यन्तनम्रो भूत्वाऽऽहेति संबन्धः॥ ३५॥

श्री० टी०—ततो यद्वृत्तं तद्धृतराष्ट्रं प्रति संजय उवाच—एतदिति। एतत्पूर्वश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीट्यर्जुनः कृताञ्जलिः संपुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याहोक्तवान्। कथमाह भयहर्षाद्यावेशवशाद्गद्गदेन कण्ठकम्पनेन सह वर्तत इति सगद्गदं यथा भवति तथा। किं च भीतादपि भीतः सन्प्रणम्यावनतो भूत्वा॥ ३५॥

म० टी०—एकादशभिः—

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च॥
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः॥ ३६॥

स्थान इत्यव्ययं युक्तमित्यर्थे। हे हृषीकेश सर्वेन्द्रियप्रवर्तक यतस्त्वमेवमत्यन्ताद्भुतप्रभावो भक्तवत्सलश्च ततस्तव प्रकीर्त्या प्रकृष्टया कीर्त्या निरतिशयप्राशस्त्यस्य कीर्तनेन

